# किराताष्टकम्

तापिञ्छनीलाभ कलेबराय
पिञ्छावतंसाय महेश्वराय ।
भक्तप्रियाय अमरपूजिताय
किरातरूपाय नमः शिवाय ॥ 1 ॥

त्रयीमायार्ति विनाशनाय
त्रैलोक्यनाथाय दयापराय ।
योगीन्द्र चितांबुज संस्थिताय
किरातरूपाय नमः शिवाय ॥ 2 ॥

समस्त लोकोद्भवकारणाय
भवाब्धिपोताय भयापहाय ।
भूतेश्वराय अखिलभूतिदाय
किरातरूपाय नमः शिवाय ॥ 3 ॥

कल्याणदाय अमलविग्रहाय
ज्ञानस्वरूपाय गुणालयाय ।
विख्यातवीराय विशारदाय
किरातरूपाय नमः शिवाय ॥ 4 ॥

अपारदुःखार्णव नाविकाय
क्षिप्रप्रसादाय वरप्रदाय ।
वीराय नानामुनि सेविताय
किरातरूपाय नमः शिवाय ॥ 5 ॥

महानुभावाय महाभुजाय
महीपरित्राण समुत्थिताय ।
चोरारि दुष्टग्रह नाशनाय
किरातरूपाय नमः शिवाय ॥ 6 ॥

कोदण्ड बाणच्छुरिका विराजत्
कराय ते वैरिकुलान्तकाय ।
भक्तार्तिहन्त्रे परदैवताय
किरातरूपाय नमः शिवाय ॥ 7 ॥

आद्यन्तहीनाय निरामयाय
सर्वात्मने कल्मषनाशनाय ।
तापत्रय व्याधिभिषरग्वराय
किरातरूपाय नमः शिवाय ॥ 8 ॥

॥ इति किराताष्टकं संपूर्णम् ॥